# संस्कृत-वार्ताः

दिनाङ्कः - 26-11-2020

प्रातः - 06: 55

<u>मुख्य-वार्ताः</u>

- **निवाराख्यो चक्रवातः तमिलनाडोः पुडुचेर्याः च तटीयक्षेत्राणि प्राप्तः।**
- **प्रधानमन्त्रिणोक्तं भारतस्य शक्तिः आविश्वे अस्य छविपरिवर्तनं कर्तुं समर्था।**
- **गृहमन्त्रालयेन कोविड-नवदश महामार्याः नियन्त्रणाय नवीनदिशानिर्देशनियमाः संसूचिताः।**
- **केन्द्रीय मन्त्रिमण्डलेन राष्ट्रिय-निवेश-अवसंरचना-कोषद्वारा प्रायोजिते ऋण-पटले षड् सहस्र-कोटिरूप्यकाणां राशिः, निवेशाय अनुमतः।**
- **अखिलमपि राष्ट्र अद्य संविधानदिवसं परिपालयति।**
- **अर्जेन्टीनायाः महान् पादकन्दुक-क्रीडकः डियेगो माराडोना ह्यः दिवंगतः।**

**कोविड आपनिंग**

**कोरोणामहामार्याः विरुद्धं देशः ऐक्यभावनया युद्धयति। भवन्तोऽपि अस्माभिः सह सुरक्षायाः उपायत्रयस्य संकल्पं स्वीकुर्वन्तु -**

**मुखावरंक सन्धारयन्तु**

**सामाजिकदौर्यं परिपालयन्तु,**

**पाणिपादं च यथासमयं प्रक्षालयन्तु।**

निवार-चक्रवात:

निवाराख्यो चक्रवात: तमिलनाडो: पुडुचेर्या: च तटीयक्षेत्राणि प्राप्त:। लोकानां संरक्षणाय तान् सुरक्षितस्थानानि नेतुं कार्याणि तीव्रगत्या प्रचलिन्त। वातावरण विभागानुसारि चक्रवातस्य गतासु होरासु गति: एकादश किलोमीटरमिता प्रतिहोरं वर्तते। अयं चक्रवातो भीषणं रूपं धारयति। चक्रवातकारणेन अधिकांशत: जिलासु अतिवृष्टि: सञ्जायते। उत्तर-चेन्नय्यां गत चतुर्विंशतिहोरासु षोडशसेण्टीमीटर परिमिता वर्षा: जाता:। धीवरा अपि प्रशासनेन सञ्चेतिता: यत् ते समुद्रं प्रति मा गच्छेयु:।

प्रधानमंत्री-लखनऊ विश्वविद्यालय:

प्रधानमन्त्रिणोक्तं भारतस्य शक्ति: आविश्वे अस्य छविपरिवर्तनं कर्तुं समर्था। श्रीमोदी उक्तवक्तव्यं लखनौ विश्वविद्यालयस्य शताब्दीसमारोहं सम्बोधयन् प्राकाशयत्। समारोहे उपस्थितान् विद्यार्थि-शिक्षकान् च सम्बोधयता प्रधानमन्त्रिणा उक्तं यत् विश्वविद्यालया: न केवलम् उच्चशिक्षाया: केन्द्राणि अपितु चरित्रनिर्माणय प्रेरणाकेन्द्राणि अपि सन्ति। श्रीमोदिनोक्तं यत् शतं वर्षाणां कालखण्ड: न केवलं कालखण्ड: अपितु अपारोपलब्धीनां जीवन्तेतिहास: विद्यते। श्रीमोदिना अस्मिन्नवसरे विश्वविद्यालयस्य शताब्दस्मारकपणस्य अनावरणं विहितम्।

## प्रधानमन्त्री-अधिष्ठातृ-सम्मेलनम्

प्रधानमन्त्री नरेन्द्रमोदी अद्य अखिलभारतीय-अधिष्ठातृ-अधिवेशनं सम्बोधयिष्यति। द्विदिवसात्मकस्य अस्य अधिवेशनस्य शुभारम्भः ह्यः गुजरातस्य केवडियायाम् अभूत्। अस्य समारोपावसरे अद्य प्रधानमन्त्री नरेन्द्रमोदी दृश्यश्रव्यप्रणाल्या अधिवेशनं सम्बोधयिष्यति।

## गृहमन्त्रालय-दिशानिर्देशाः

गृहमन्त्रालयेन कोविड-नवदश महामार्याः नियन्त्रणाय नवीनदिशानिर्देशनियमाः संसूचिताः। दिसम्बर मासस्य एकतारिकाया अनन्तरम् इमे नियमाः प्रभाविनः भवितारः। एतेषां नवीनदिशानिर्देशानाम् उद्देश्यं देशे प्रसृतस्य कोविडनवदश संक्रमणस्य नियन्त्रणम् अस्ति। दिशानिर्देशानुसारं स्थानीयजिलाधिकारिणः आरक्षिणः नगरनिगमाणां च अधिकारिणः इदं सुनिश्चितं करिष्यन्ति यत् सुरक्षानियमानां सम्यक्तया परिपालनं भवेत्।

## केन्द्रीय मंत्रिमंडल

केन्द्रीय मन्त्रिमण्डलेन राष्ट्रिय-निवेश-अवसंरचना-कोषद्वारा प्रायोजिते ऋण-पटले षड् सहस्र-कोटिरूप्यकाणां राशिः, निवेशाय अनुमतः। अधुना आगामि पञ्चवर्षेषु आधारभूत-क्षेत्रेषु राष्ट्रिय-निवेश-अवसरंचना-कोषः धनं उपकल्पयिष्यति। सूचना-प्रसारण-मिन्त्रणा प्रकाशजावड़ेकरेण नवदिल्ल्यां वार्ताहरसम्मेलने केन्द्रीयमन्त्रिमण्डलस्य अयं निर्णयः प्रतिपादितः।

संविधान दिवस:

अखिलमपि राष्ट्र अद्य संविधानदिवसं आमानयति। राष्ट्रियविधिदिवसत्वेन अपि आमान्यते अयं दिवस:। ध्येयमस्ति यत् गतशताब्दस्य ऊनपञ्चाशततमे वर्षे नवम्बर-मासस्य षडविंशे दिवसे स्वतन्त्र-भारतस्य संविधानसभया औपचारिक-रूपेण संविधानम् स्वीकृतम् आसीत्। यद्धि अग्रिमवर्षे जनवरीमासस्य षड्विंशे-दिनांके प्रवर्तितम् आसीत्।

कोरोना

भारतेन पुना रचित: कोरोणा-संघर्ष-परक: नूतनेतिहास:। प्रत्यहनि पुष्टिं गम्यमानानि नूतनानि प्रकरणानि ह्य: अनुक्रमं अष्टादशे दिनांकेपि पञ्चाशत् सहस्रतो अधोगतानि। विगते अहोरात्रे प्राय: चतुश्चत्वारिंशत् सहस्रं महामार्या: नवानि प्रकरणानि समक्षमायातानि। समानसमये अष्ट-त्रिंशत्-सहस्रं कोरोणा-ग्रस्ता साफल्येन स्वस्थीभूय चिकित्सावकाशं प्राप्ता:। अत्रान्तरे राष्ट्रिय-स्वस्थता-मिति: त्रि-नवति दशमलव-सप्त-द्वि-परिमिता समंकिता।

डियेगो माराडोना

अर्जेन्टीनाया: महान् पादकन्दुक-क्रीडक: डियेगो माराडोना ह्य: दिवंगत:। स: षष्टीवर्षीय: आसीत्। हृदयाघातेन माराडोना पञ्चत्वे विलीन: सञ्जात:।